# विष्णुधर्मसूत्रम्

## प्रथमो भागः

### प्रथमोऽध्यायः

ब्रह्मरात्र्यां व्यतीतायां प्रबुद्धे पद्मसंभवे
विष्णुः सिसृक्षुर्भूतानि ज्ञात्वा भूमिं जलानुगाम् १

जलक्रीडारुचि शुभं कल्पाधिषु यथा पुरा
वाराहमास्थितो रूपमुज्जहार वसुंधराम् २

वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ३

अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः
आज्यनासः स्रुवतुण्डः सामघोषस्वनो महान् ४

धर्मसत्यमयः श्रीमान्क्रमविक्रमसत्कृतः
प्रायश्चित्तमहाघोणः पशुजानुर्महाकृतिः ५

उद्गात्रान्त्रो होमलिङ्गो बीजौषधिमहाफलः
वेद्यन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः ६

वेदिस्कन्धो हविर्गन्धो हव्यकव्यादिवेगवान्
प्राग्वंषकायो द्युतिमान्नानादीक्षाभिरन्वितः ७

दक्षिणाहृदयो योगमहामन्त्रमयो महान्
उपाकर्मोष्ठरुचिरः प्रवर्ग्यावर्तभूषणः ८

नानाच्छन्दोगतिपथो गुह्योपनिषदासनः
छायापत्नीसहायो वै मणिशृङ्ग इवोदितः ९

महीं सागरपर्यन्तां सशैलवनकाननां
एकार्णवजलभ्रष्टामेकार्णवगतः प्रभुः १०

दंष्ट्राग्रेण समुद्धृत्य लोकानां हितकाम्यया
आदिदेवो महायोगी चकार जगतीं पुनः ११

एवं यज्ञवराहेण भूत्वा भूतहितार्थिना
उद्धृता पृथिवी देवी रसातलगता पुरा १२

उद्धृत्य निश्चले स्थाने स्थापयित्वा तथा स्वके
यथास्थानं विभज्यापस्तद्गता मधुसूदनः १३

सामुद्र्यश्च समुद्रेषु नादेयीश्च नदीषु च
पल्वलेषु च पाल्वल्यः सरःसु च सरोभवाः १४

पातालसप्तकं चक्रे लोकानां सप्तकं तथा
द्वीपानामुदधीनां च स्थानानि विविधानि च १५

स्थानपालां लोकपालान्नदीः शैलवनस्पतीन्
ऋषींश्च सप्त धर्मज्ञान्वेदान्सान्ङान्सुरासुरान् १६

पिशाचोरगगन्धर्वयक्षराक्षसमानुषान्
पशुपक्षिमृगाद्यांश्च भूतग्रामं चतुर्विधम्
मेघेन्द्रचापशम्पाद्यान्यज्ञांश्च विविधांस्तथा १७

एवं वराहो भगवान्कृत्वेदं सचराचरम्
जगज्जगाम लोकानामविज्ञातां तदा गतिम् १८

अविज्ञातां गतिं याते देवदेवे जनार्दने
वसुधा चिन्तयामास का धृतिर्मे भविष्यति १९

पृच्छामि कश्यपं गत्वा स मे वक्ष्यत्यसंशयम्
मदीयां वहते चिन्तां नित्यमेव महामुनिः २०

एवं सा निश्चयं कृत्वा देवी स्त्रीरूपधारिणी
जगाम कश्यपं द्रष्टुं दृष्टवांस्तां च कश्यपः २१

नीलपङ्कजपत्राक्षीं शारदेन्दुनिभाननाम्
अलिसंघालकां शुभ्रां बन्धुजीवाधरां शुभाम् २२

सुभ्रूं सुसूक्ष्मदशनां चारुनासां नतभ्रुवम्
कम्बुकण्ठीं संहतोरूं पीनोरुजघनस्थलाम् २३

विरेजतुः स्तनौ यस्याः समौ पीनौ निरन्तरौ
शक्रेभकुम्भसंकाशौ शातकुम्भसमद्युती २४

मृणालकोमलौ बाहू करौ किसलयोपमौ
रुक्मस्तम्भनिभावूरू गूढे श्लिष्टे च जानुनी २५

जङ्घे विरोमे सुसमे पादावतिमनोरमौ
जघनं च घनं मध्यं यथा केसरिणः शिशोः २६

प्रभायुता नखास्ताम्रा रूपं सर्वमनोहरम्
कुर्वाणां वीक्षितैर्नित्यं नीलोत्पलयुता दिशः २७

कुर्वाणां प्रभया देवीं तथा वितिमिरा दिशः
सुसूक्ष्मशुक्लवसनां रत्नोत्तमविभूषितां २८

पदन्यासैर्वसुमतीं सपद्मामिव कुर्वतीं
रूपयौवनसंपन्नां विनीतवदुपस्थिताम् २९

समीपमागतां दृष्ट्वा पूजयित्वाथ कश्यपः
उवाच तां वरारोहे विज्ञातं हृद्गतं मया ३०

धरे तव विशालाक्षि गच्छ देवि जनार्दनम्
स ते वक्ष्यत्यशेषेण भाविनी ते यथा धृतिः ३१

क्षीरोदे वसतिस्तस्य मया ज्ञाता शुभानने
ध्यानयोगेन चार्वङ्गि त्वदर्थं तत्प्रसादतः ३२

इत्येवमुक्ता संपूज्य कश्यपं वसुधा ततः
प्रययौ केशवं द्रष्टुं क्षीरोदमथ सागरम् ३३

सा ददर्शामृतनिधिं चन्द्ररश्मिमनोहरम्
पवनक्षोभसंजातवीचीशतसमाकुलम् ३४

हिमवच्छतसंकाशं भूमण्डलमिवापरम्
वीचीहस्तैः प्रचलितैराह्वयानमिव क्षितिम् ३५

तैरेव शुक्लतां चन्द्रे विदधानमिवानिशम्
अन्तरस्थेन हरिणा विगताशेषकल्मषम् ३६

यस्मात्तस्माद्धारयन्तं सुशुक्लां तनुमूर्जिताम्
पाण्डुरं खगमागम्यमधोभुवनवर्तिनम् ३७

इन्द्रनीलकडाराढ्यं विपरीतमिवाम्बरम्
फलावलीसमुद्भूतवनसंघमिवाचितम् ३८

निर्मोकमिव शेषाहेर्विस्तीर्णान्तमतीव हि
तं दृष्ट्वा तत्र मध्यस्थं ददृशे केशवालयम्  ३९

अनिर्देश्यपरीमाणमनिर्देश्यर्द्धिसंयुतम्
शेषपर्यङ्कगं तस्मिन्ददर्श मधुसूदनम्  ४०

शेषाहिफणरत्नांशुदुर्विभाव्यमुखाम्बुजम्
शशाङ्कशतसंकाशं सूर्यायुतसमप्रभम्  ४१

पीतवाससमक्षोभ्यं सर्वरत्नविभूषितम्
मुकुटेनार्कवर्णेन कुण्डलाभ्यां विराजितम्  ४२

संवाह्यमानाङ्घ्रियुगं लक्ष्म्या करतलैः शुभैः
शरीरधारिभिः शस्त्रैः सेव्यमानं समन्ततः  ४३

तं दृष्ट्वा पुण्डरीकाक्षं ववन्दे मधुसूदनम्
जानुभ्यामवनिं गत्वा विज्ञापयति चाप्यथ  ४४

उद्धृताहं त्वया देव रसातलतलं गता
स्वस्थाने स्थापिता विष्णो लोकानां हितकाम्यया  ४५

तत्राधुना हि देवेश का धृतिर्मे भविष्यति
एवमुक्तस्तया देव्या देवो वचनमब्रवीत्  ४६

वर्णाश्रमाचाररताः सन्तः शास्त्रैकतत्पराः
त्वां धरे धारयिष्यन्ति तेषां त्वद्भार आहितः  ४७

एवमुक्ता वसुमती देवदेवमभाषत
वर्णानामाश्रमाणां च धर्मान्वद सनातन  ४८

त्वत्तोऽहम्श्रोतुमिच्छामि त्वं हि मे परमा गतिः
नमस्ते देवदेवेश देवारिबलसूदन ४९

नारायण जगन्नाथ शङ्खचक्रगदाधर
पद्मनाभ हृषीकेश महाबलपराक्रम ५०

अतीन्द्रिय सुदुष्पार देव शार्ङ्गधनुर्धर
वराह भीम गोविन्द पुराण पुरुषोत्तम ५१

हिरण्यकेश विश्वाक्ष यज्ञमूर्ते निरञ्जन
क्षेत्रक्षेत्रज्ञदेवेश सलिलार्णवशायक ५२

मन्त्र मन्त्रवहाचिन्त्य वेदवेदाङ्गविग्रह
जगतोऽस्य समग्रस्य सृष्टिसंहारकारक ५३

धर्माधर्मज्ञ धर्माङ्ग धर्मयोने वरप्रद
विष्वक्सेनामृत व्योम मधुकैटभसूदन ५४

बृहतां बृंहणाज्ञेय सर्व सर्वाभयप्रद
वरेण्यानघ जीमूत जगन्निर्माणकारक ५५

आप्यायन अपां स्थान चैतन्याधार निष्क्रिय
सप्तशीर्षाध्वरगुरो पुराणपुरुषोत्तम ५६

ध्रुवाक्षर सुसूक्ष्मेश भक्तवत्सल पावन
त्वं गतिः सर्वदेवानां त्वं गतिर्ब्रह्मवादिनाम् ५७

तथा विदितवेद्यानां गतिस्त्वं पुरुषोत्तम
प्रपन्नास्मि जगन्नाथ ध्रुवं वाचस्पतिं प्रभुम् ५८

सुब्रह्मरायमनाधृष्यं वसुषेणं वसुप्रदम्
महायोगबलोपेतं पृश्निगर्भं धृतार्चिषम्  ५९

वासुदेवं महात्मानं पुराडरीकाक्षं अच्युतम्
सुरासुरगुरुं देवं विभुं भूतमहेश्वरम्  ६०

एकव्यूहं चतुर्बाहुं जगत्कारणकारणम्
ब्रूहि मे भगवन्धर्मांश्चातुर्वरार्यस्य शाश्वतान्  ६१

आश्रमाचारसंयुक्तान्सरहस्यान्ससंग्रहान्
एवमुक्तस्तु देवेशः क्षोराया क्षोणीमभाषत  ६२

शृणु देवि धरे धर्मांश्चातुर्वरार्यस्य शाश्वतान्
आश्रमाचारसंयुक्तान्सरहस्यान्ससंग्रहान्  ६३

ये तु त्वां धारयिष्यन्ति सन्तस्तेषां परायणान्
निषराणा भव वामोरु काञ्चनेऽस्मिन्वरासने  ६४

सुखासीना निबोध त्वं धर्मान्निगदतो मम
शुश्रुवे वैष्णवान्धर्मान्सुखासीना धरा तदा  ६५

## द्वितीयोऽध्यायः

ओम्  ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति वर्णाश्चत्वारः  १  तेषामाद्या द्विजातयस्त्रयः  २  तेषां निषेकाद्यः श्मशानान्तो मन्त्रवत्क्रियासमूहः  ३  तेषां च धर्माः  ४  ब्राह्मणस्याध्यापनम्  ५  क्षत्रियस्य शस्त्रनित्यता  ६  वैश्यस्य पशुपालनम्  ७  शूद्रस्य द्विजातिशुश्रूषा  ८  द्विजानां यजनाध्ययने  ९  अथैतेषां वृत्तयः  १०  ब्राह्मणस्य याजनप्रतिग्रहौ  ११  क्षत्रियस्य क्षितित्राणम्  १२  कृषिगोरक्षवाणिज्यकुसीदयोनिपोषणानि वैश्यस्य  १३  शूद्रस्य सर्वशिल्पानि  १४  आपद्यनन्तरा वृत्तिः  १५

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया १६

आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्
अनभ्यसूया च तथा धर्मः सामान्य उच्यते १७

तृतीयोऽध्यायः

अथ राजधर्माः १ प्रजापरिपालनम् २ वर्णाश्रमाणां स्वे स्वे धर्मे व्यवस्थापनम् ३ राजा च जाङ्गलं पशव्यं सस्योपेतं देशमाश्रयेत् ४ वैश्यशूद्रप्रायं च ५ तत्र धन्वनृमहीवारिवृक्षगिरिदुर्गाणामन्यतमं दुर्गमाश्रयेत् ६ तत्रस्थश्च स्वस्व-ग्रामाधिपान्कुर्यात् ७ दशाध्यक्षान् ८ शताध्यक्षान् ९ देशाध्यक्षांश्च १० ग्रामदोषाणां ग्रामाध्यक्षः परिहारं कुर्यात् ११ अशक्तो दशग्रामाध्यक्षाय निवेदयेत् १२ सोऽप्यशक्तः शताध्यक्षाय १३ सोऽप्यशक्तो देशाध्यक्षाय १४ देशाध्यक्षोऽपि सर्वात्मना दोषमुच्छिन्द्यात् १५ आकरशुल्कतर-नागवनेश्वाप्तान्नियुञ्जीत १६ धर्मिष्ठान्धर्मकार्येषु १७ निपुणानर्थकार्येषु १८ शूरान्संग्रामकर्मसु १९ उग्रानुग्रेषु २० षण्ढान्स्त्रीषु २१ प्रजाभ्यो बल्यर्थं संवत्सरेण धान्यतः षष्ठमंशमादद्यात् २२ सर्वसस्येभ्यश्च २३ द्विकं शतं पशुहिरण्येभ्यो वस्त्रेभ्यश्च २४ मांसमधुघृतौषधिगन्धपुष्पमूलफलरसदारु-पत्राजिनमृद्भाण्डाश्मभाण्डवैदलेभ्यः षाष्ठभागं राजा २५ ब्राह्मणेभ्यः करा-दानं न कुर्यात् २६ ते हि राज्ञो धर्मकराः २७ राजा च प्रजाभ्यः सुकृत-दुष्कृतेभ्यः षष्ठांशभाक् २८ स्वदेशपण्याच्च शुल्कांशं दशममादद्यात् २९ परदेशपण्याच्च विंशतितमम् ३० शुल्कस्थानादपाक्रामन्सर्वापहारमाप्नुयात् ३१ शिल्पिनः कर्मजीविनश्च मासेनैकं राज्ञः कर्म कुर्युः ३२ स्वाम्यमात्य-दुर्गकोशदण्डराष्ट्रमित्राणि प्रकृतयः ३३ तद्दूषकांश्च हन्यात् ३४ स्वराष्ट्रपर-राष्ट्रयोश्च चारचक्षुः स्यात् ३५ साधूनां पूजनं कुर्यात् ३६ दुष्टांश्च हन्यात् ३७ शत्रुमित्रोदासीनमध्यमेषु सामभेददानदण्डान्यथार्हं यथाकालं प्रयुञ्जीत ३८ संधिविग्रहयानासनसंश्रयद्वैधीभावांश्च यथाकालमाश्रयेत् ३९ चैत्रे मार्गशीर्षे वा यात्रां यायात् ४० परस्य व्यसने वा ४१ परदेशावाप्तौ तद्देशधर्मान्नो-च्छिन्द्यात् ४२ परेणाभियुक्तश्च सर्वात्मना स्वराष्ट्रं गोपायेत् ४३ नास्ति राज्ञां समरे तनुत्यागसदृशो धर्मः ४४ गोब्राह्मणनृपमित्रधनदारजीवितरक्षणाद्ये

हतास्ते स्वर्गलोकभाजः ४५ वर्णसंकररक्षणार्थं च ४६ राजा परपुरावाप्तौ तत्र तत्कुलीनमभिषिञ्चेत् ४७ न राजकुलमुच्छिन्द्यात् ४८ अन्यत्राकुलीन-राजकुलात् ४९ मृगयाक्षस्त्रीपानाभिरतिं परिहरेत् ५० वाक्पारुष्यदण्डपारुष्ये च ५१ नार्थदूषणं कुर्यात् ५२ आद्यद्वाराणि नोच्छिन्द्यात् ५३ नापात्रवर्षी स्यात् ५४ आकरेभ्यः सर्वमादद्यात् ५५ निधिं लब्ध्वा तदर्धं ब्राह्मणेभ्यो दद्यात् ५६ द्वितीय्मर्धं कोशे प्रवेशयेत् ५७ निधिं ब्राह्मणो लब्ध्वा सर्वमादद्यात् ५८ क्षत्रियश्चतुर्थमंशं राज्ञे दद्याच्चतुर्थमंशं ब्राह्मणेभ्योऽर्धमा-दद्यात् ५९ वैष्यस्तु चतुर्थमंशं राज्ञे दद्याद्ब्राह्मणेभ्योऽर्धं चतुर्थमंशमादद्यात् ६० शूद्रश्चावाप्तं द्वादशधा विभज्य पञ्चांशान्राज्ञे दद्यात्पञ्चांशान्ब्राह्मणेभ्योंऽश-द्वयमादद्यात् ६१ अनिवेदितविज्ञातस्य सर्वमपहरेत् ६२ स्वनिहिताद्राज्ञे ब्राह्मणवर्जं द्वादशमंशं दद्युः ६३ परनिहितं स्वनिहितमिति ब्रुवंस्तत्समं दण्ड-मावहेत् ६४ बालानाथस्त्रीधनानि राजा परिपालयेत् ६५ चौरहृतं धनमवाप्य सर्वमेव सर्ववर्णेभ्यो दद्यात् ६६ अनवाप्य च स्वकोशादेव दद्यात् ६७ शान्तिस्वस्त्ययनोपायैर्दैवोपघातान्प्रशमयेत् ६८ परचक्रोपघातांश्च शस्त्र-नित्यतया ६९ वेदेतिहासधर्मशास्त्रार्थकुशलं कुलीनमव्यङ्गं तपस्विनं पुरो-हितं च वरयेत् ७० शुचीनलुब्धानवहितान्शक्तिसंपन्नान्सर्वार्थेषु च सहायान् ७१ स्वयमेव व्यवहारान्पश्येद्विद्वद्भिर्ब्राह्मणैः सार्धम् ७२ व्यवहारदर्शने ब्राह्मणं वा नियुञ्ज्यात् ७३ जन्मकर्मव्रतोपेताश्च राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः कामक्रोधभयलोभादिभिः कार्यार्थिभिरनाहार्याः ७४ राजा च सर्वकार्येषु सांवत्सराधीनः स्यात् ७५ देवब्राह्मणान्सततमेव पूजयेत् ७६ वृद्धसेवी भवेत् ७७ यज्ञयाजी च ७८ न चास्य विषये ब्राह्मणः क्षुधा-र्तोऽवसीदेत् ७९ न चान्योऽपि सत्कर्मनिरतः ८० ब्राह्मणेभ्यश्च भुवं प्रति-पादयेत् ८१ येषां च प्रतिपादयेत्तेषां स्ववंश्यान्भुवः परिमाणं दानच्छेदोपवर्णनं च पटे ताम्रपट्टे वा लिखितं स्वमुद्राङ्कितं चागामिनृपतिविज्ञापनार्थं दद्यात् ८२ परदत्तां च भुवं नापहरेत् ८३ ब्राह्मणेभ्यः सर्वदायान्प्रयच्छेत् ८४ सर्वत-स्त्वात्मानं गोपायेत् ८५ सुदर्शनश्च स्यात् ८६ विषघ्नागदमन्त्रधारी च ८७ नापरीक्षितमुपयुञ्ज्यात् ८८ स्मितपूर्वाभिभाषी स्यात् ८९ वध्येष्वपि न भ्रूंकुटीमाचरेत् ९० अपराधानुरूपं च दण्डं दण्ड्येषु दापयेत् ९१ सम्यग्दण्डप्रणयनं कुर्यात् ९२ द्वितीयमपराधं न स कस्यचित्क्षमेत ९३ स्वधर्ममपालयन्नादण्ड्यो नामास्ति राज्ञाम् ९४

यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भयः
प्रजास्तत्र विवर्धन्ते नेता चेत्साधु पश्यति ९५

स्वराष्ट्रे न्यायदण्डः स्याद्भृशदण्डश्च शत्रुषु
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ९६

एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः
विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि ९७

प्रजासुखे सुखी राजा तद्दुःखे यश्च दुःखितः
स कीर्तियुक्तो लोकेऽस्मिन्प्रेत्य स्वर्गे महीयते ९८

## चतुर्थोऽध्यायः

जालस्थार्कमरीचिगतं रजः त्रसरेणुसंज्ञकम् १ तदष्टकं लिक्षा २ तत्त्रयं राजसर्षपः ३ तत्त्रयं गौरसर्षपः ४ तत्षट्कं यवः ५ तत्त्रयं कृष्णलम् ६ तत्पञ्चकं माषः ७ तद्द्वादशकमक्षार्धम् ८ अक्षार्धमेव सचतुर्माषकं सुवर्णः ९ चतुःसुवर्णको निष्कः १० द्वे कृष्णले समधृते रूप्यमाषकः ११ तत्षोडशकं धरणम् १२ ताम्रकार्षिकः कार्षापणः १३

पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेष चोत्तमः १४

## पञ्चमोऽध्यायः

अथ महापातकिनो ब्राह्मणवर्जं सर्वे वध्याः १ न शारीरो ब्राह्मणस्य दण्डः २ स्वदेशाद्ब्राह्मणं कृताङ्कं विवासयेत् ३ तस्य च ब्रह्महत्यायामशिरस्कं पुरुषं ललाटे कुर्यात् ४ सुराध्वजं सुरापाने ५ श्वपदं स्तेये ६ भगं गुरुतल्पगमने ७ अन्यत्रापि वध्यकर्मणि तिष्ठन्तं समग्रधनमक्षतं विवासयेत् ८ कूटशासनकर्तॄंश्च राजा हन्यात् ९ कूटलेख्यकारांश्च १० गरदाग्निदप्रसह्यतस्करान्स्त्रीबालपुरुषघातिनश्च ११ ये च धान्यं दशभ्यः कुम्भेभ्योऽधिकमपहरेयुः १२ धरिममेयानां शतादभ्यधिकम् १३ ये चाकुलीना

राज्यमभिकामयेयुः १४ सेतुभेदकांश्च १५ प्रसह्य तस्कराणां चावकाश-भक्तप्रदांश्च १६ अन्यत्र राजाशक्तेः १७ स्त्रियमशक्तभर्तृकां तदतिक्रमणीं च १८ हीनवर्णोऽधिकवर्णस्य येनाङ्गेनापराधं कुर्यात्तदेवास्य शातयेत् १९ एकासनोपवेशी कट्यां कृताङ्को निर्वास्यः २० निष्ठीव्यौष्ठद्वयविहीनः कार्यः २१ अवशर्धयिता च गुदहीनः २२ आक्रोशयिता च विजिह्वः २३ दर्पेण धर्मोपदेशकारिणां राजा तप्तमासेचयेत्तैलमास्ये २४ द्रोहेण च नामजातिग्रहणे दशाङ्गुलोऽस्य शङ्कुर्निखेयः २५ श्रुतदेशजातिकर्मणामन्यथावादी कार्शापण-शतद्वयं दण्ड्यः २६ काणखञ्जादीनां तथ्यवाद्यपि कार्शापणद्वयम् २७ गुरूनाक्षिपन्कार्शापणशतद्वयम् २८ परस्य पतनीयाक्षेपे कृते तूत्तमसाहसम् २९ उपपातकयुक्ते मध्यमम् ३० त्रैविद्यवृद्धानां क्षेपे जातिपूगानां च ३१ ग्रामदेशयोश्च प्रथमसाहसम् ३२ न्यङ्गतायुक्ते क्षेपे कार्शापणशतम् ३३ मातृयुक्ते तूत्तमम् ३४ समवर्णाक्रोशने द्वादश पणान्दण्ड्यः ३५ हीनवर्णाक्रोशने षट् ३६ यथाकालमुत्तमवर्णाक्षेपे तत्प्रमाणो दण्डः ३७ त्रयो वा कार्षापणाः ३८ शुक्तवाक्याभिधाने त्वेवमेव ३९ पारजायी सवर्णागमने तूत्तमसाहसं दण्ड्यः ४० हीनवर्णागमने मध्यमम् ४१ गोगमने च ४२ अन्त्यागमने वध्यः ४३ पशुगमने कार्षापणशतं दण्ड्यः ४४ दोषमनाख्याय कन्यां प्रयच्छंश्च ४५ तां च बिभृयात् ४६ अदुष्टां दुष्टामिति ब्रुवन्नुत्तमसाहसम् ४७ गजाश्वोष्ट्रगोघाती त्वेककरपादः कार्यः ४८ विमांसविक्रयी च ४९ ग्राम्यपशुघाती कार्षापणशतं दण्ड्यः ५० पशुस्वामिने तन्मूल्यं दद्यात् ५१ आरण्यपशुघाती पञ्चाशतं कार्षापणान् ५२ पक्षिघाती मत्स्यघाती च दश कार्षापणान् ५३ कीटोपघाती च कार्षापणम् ५४ फलोपगमद्रुमच्छेदी तूत्तमसाहसम् ५५ पुष्पोपगमद्रुमच्छेदी मध्यमम् ५६ वल्लीगुल्मलताच्छेदी कार्षापणशतम् ५७ तृणच्छेद्येकम् ५८ सर्वे च तत्स्वामिनां तदुत्पत्तिम् ५९ हस्तेनोद्गूरयिता दशकार्षापणम् ६० पादेन विंशतिम् ६१ काष्ठेन प्रथम-साहसम् ६२ पाषाणेन मध्यमम् ६३ शस्त्रेणोत्तमम् ६४ पादकेशांशुककर-लुञ्चने दश पणान् ६५ शोणितेन विना दुःखमुत्पादयिता द्वात्रिंशत्पणान् ६६ सह शोणितेन चतुःषष्टिम् ६७ करपाददन्तभङ्गे कर्णनासाविकर्तने मध्यमम् ६८ चेष्टाभोजनवाग्रोधे प्रहारदाने च ६९ नेत्रकंधराबाहुसक्थ्यंसभङ्गे चोत्तमम् ७० उभयनेत्रभेदिनं राजा यावज्जीवं बन्धनान्न मुञ्चेत् ७१ तादृशमेव वा कुर्यात् ७२ एकं बहूनां निघ्नतां प्रत्येकमुक्ताद्दण्डाद्द्विगुणः ७३ उत्क्रोशन्तमनभि-

धावतां तत्समीपवर्तिनां संसरतां च ७४ सर्वे च पुरुषपीडाकरास्तदुत्थानव्ययं दद्युः ७५ ग्राम्यपशुपीडाकराश्च ७६ गोऽश्वोष्ट्रगजापहार्येककरपादः कार्यः ७७ अजाव्यपहार्येककरश्च ७८ धान्यापहार्येकादशगुणं दण्ड्यः ७९ सस्यापहारी च ८० सुवर्णरजतवस्त्राणां पञ्चाशतस्त्वभ्यधिकमपहरन्विकरः ८१ तदूनमेकादशगुणं दण्ड्यः ८२ सूत्रकार्पासगोमयगुडदधिक्षीरतक्रतृण-लवणमृद्भस्मपक्षिमत्स्यघृततैलमांसमधुवैदलवेणुमृन्मयलोहभाण्डानामपहर्ता मूल्यात्त्रिगुणं दण्ड्यः ८३ पक्वान्नानां च ८४ पुष्पहरितगुल्मवल्लीलता-पर्णानामपहरणे पञ्चकृष्णलम् ८५ शाकमूलफलानां च ८६ रत्नापहार्युत्तम-साहसम् ८७ अनुक्तद्रव्याणामपहर्ता मूल्यसमम् ८८ स्तेनाः सर्वमपहृतं धनिकस्य दाप्याः ८९ ततस्तेषामभिहितदण्डप्रयोगः ९० येषां देयः पन्था-स्तेषामपथदायी कार्षापणपञ्चविंशतिं दण्ड्यः ९१ आसनार्हस्यासनमददच्च ९२ पूजार्हमपूजयंश्च ९३ प्रातिवेश्यब्राह्मणनिमन्त्रणातिक्रमणे च ९४ निम-न्त्रयित्वा भोजनादायिनश्च ९५ निमन्त्रितस्तथेत्युक्त्वा चाभुञ्जानः सुवर्णमा-षकम् ९६ निकेतयितुश्च द्विगुणमन्नम् ९७ अभक्ष्येण ब्राह्मणस्य दूषयिता षोडश सुवर्णान् ९८ जात्यपहारिणा शतम् ९९ सुरया वध्यः १०० क्षत्रियं दूषयितुस्तदर्धम् १०१ वैश्यं दूषयितुस्तदर्धमपि १०२ शूद्रं दूषयितुः प्रथम-साहसम् १०३ अस्पृश्यः कामकारेण स्पृशन्स्पृश्यं त्रैवर्णिकं वध्यः १०४ रजोवलां शिफाभिस्ताडयेत् १०५ पथ्युद्यानोदकसमीपेऽप्यशुचिकारी पणशतम् १०६ तच्चापास्यात् १०७ गृहभूकुड्याद्युपभेत्ता मध्यमसाहसम् १०८ तच्च योजयेत् १०९ गृहे पीडाकरं द्रव्यं प्रक्षिपन्पणशतम् ११० साधारणा-पलापी च १११ प्रेषितस्याप्रदाता च ११२ पितृपुत्राचार्ययाज्यर्त्विजा-मन्योन्यापतितत्यागी च ११३ न च ताञ्जह्यात् ११४ शूद्रप्रव्रजितानां दैवे पित्र्ये भोजकाश्च ११५ अयोग्यकर्मकारी च ११६ समुद्रगृहभेदकश्च ११७ अनियुक्तः शपथकारी ११८ पशूनां पुंस्त्वोपघातकारी ११९ पितापुत्रविरोधे साक्षिणां दशपणो दण्डः १२० यस्तयोश्चान्तरे स्यात्तस्योत्तमसाहसः १२१ तुलामानकूटकर्तुश्च १२२ तदकूटे कूटवादिनश्च १२३ द्रव्याणां प्रतिरूप-विक्रयिकस्य च १२४ संभूय वणिजां पण्यमनर्घेणावरुन्धताम् १२५ प्रत्येकं विक्रीणतां च १२६ गृहीतमूल्यं यः पण्यं क्रेतुर्नैव दद्यात्तस्यासौ सोदयं दाप्यः १२७ राज्ञा च पणशतं दण्ड्यः १२८ क्रीतमक्रीणतो या हानिः सा क्रेतुरेव स्यात् १२९ राजनिषिद्धं विक्रीणतस्तदपहारः १३० तरिकः स्थलजं शुल्कं

गृह्णन्दशपणान्दण्ड्यः १३१ ब्रह्मचारिवानप्रस्थभिक्षुगुर्विणीतीर्थानुसारिणां नाविकः शौल्किकः शुल्कमाददानश्च १३२ तच्च तेषां दद्यात् १३३ द्यूते कूटाक्षदेविनां करच्छेदः १३४ उपधिदेविनां संदंशच्छेदः १३५ ग्रन्थि-भेदकानां च १३६ उत्क्षेपकानां च करच्छेदः १३७ दिवा पशूनां वृकाद्युपघाते पाले त्वनायति पालदोषः १३८ विनष्टपशुमूल्यं च स्वामिने दद्यात् १३९ अननुज्ञातां दुहन्पञ्चविंशतिं कार्षापणान् १४० महिषी चेत्सस्यनाशं कुर्या-त्तत्पालस्त्वष्टौ माषान्दण्ड्यः १४१ अपालायाः स्वामी १४२ अश्वस्तूष्ट्रो गर्दभो वा १४३ गौश्चेत्तदर्धम् १४४ तदर्धमजाविकम् १४५ भक्षयित्वोपविष्टेषु द्विगुणम् १४६ सर्वत्र स्वामिने विनष्टसस्यमूल्यं च १४७ पथि ग्रामे विवीतान्ते न दोषः १४८ अनावृते च १४९ अल्पकालम् १५० उत्सृष्ट-वृषभसूतिकानां च १५१ यस्तूत्तमवर्णान्दास्ये नियोजयेत्तस्योत्तमसाहसो दण्डः १५२ त्यक्तप्रव्रज्यो राज्ञो दास्यं कुर्यात् १५३ भृतकश्चापूर्णे काले भृतिं त्यजन्सकलमेव मूल्यं दद्यात् १५४ जाज्ञे च पणशतं दद्यात् १५५ तद्दोषेण यद्विनश्येत्तत्स्वामिने १५६ अन्यत्र दैवोपघातात् १५७ स्वामी चेद्भृतकमपूर्णे काले जह्यात्तस्य सर्वमेव मूल्यं दद्यात् १५८ पणशतं च राजनि १५९ अन्यत्र भृतकदोशात् १६० यः कन्यां पूर्वदत्तामन्यस्मै दद्यात्स चौरवच्छास्यः १६१ वरदोषं विना १६२ निर्दोषां परित्यजन् १६३ पत्नीं च १६४ अजानानः प्रकाशं यः परद्रव्यं क्रीणीयात्तत्र तस्य न दोषः १६५ स्वामी द्रव्यमाप्नुयात् १६६ यद्यप्रकाशं हीनमूल्यं च क्रीणीयात्तदा क्रेता विक्रेता च चौरवच्छास्यौ १६७ गणद्रव्यापहर्ता विवास्यः १६८ तत्संविदं यश्च लङ्घयेत् १६९ निक्षेपापहार्यर्थवृद्धिसहितं धनं धनिकस्य दाप्यः १७० राज्ञा चौरवच्छास्यः १७१ यश्चानिक्षिप्तं निक्षिप्तमिति ब्रूयात् १७२ सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां कारयेत् १७३ जातिभ्रंशकरस्याभक्ष्यस्य भक्षयिता विवास्यः १७४ अभक्ष्यस्याविक्रेयस्य विक्रयी देवप्रतिमाभेदकश्चोत्तमसाहसं दण्डनीयः १७५ भिषङ्मिथ्याचरन्नुत्तमेषु पुरुषेषु १७६ मध्यमेषु मध्यमम् १७७ तिर्यक्षु प्रथमम् १७८ प्रतिश्रुतस्याप्रदायी तद्दापयित्वा प्रथमसाहसं दण्ड्यः १७९ कूटसाक्षिणां सर्वस्वापहारः कार्यः १८० उत्कोचोपजीविनां सभ्यानां च १८१ गोचर्ममात्राधिकां भुवमन्यस्याधीकृतां तस्मादनिर्मोच्या-न्यस्य यः प्रयच्छेत्स वध्यः १८२ ऊनां चेत्षोडश सुवर्णान्दण्ड्यः १८३

एकोऽश्नीयाद्यदुत्पन्नं नरः संवत्सरं फलम्
गोचर्ममात्रा सा क्षोणी स्तोका वा यदि वा बहु १८४

ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ
यस्य भुक्तिः फलं तस्य बलात्कारं विना कृता १८५

सागमेन तु भोगेन भुक्तं सम्यग्यदा तु यत्
आग्रहर्ता लभते तत्र नापहार्यं तु तत्क्वचित् १८६

पित्रा भुक्तं तु यद्द्रव्यं भुक्त्याचारेण धर्मतः
तस्मिन्प्रेते न वाच्योऽसौ भुक्त्या प्राप्तं हि तस्य तत् १८७

त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि
लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात् १८८

नखिनां शृङ्गिणां चैव दंष्ट्रिणामाततायिनाम्
हस्त्यश्वानां तथान्येषां वधे हन्ता न दोषभाक् १८९

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्
आततायिनमायान्तं हन्यादेवाविचारयन् १९०

नाततायिवधे दोषो हन्तुर्भवति कश्चन
प्रकाशं वाप्रकाशं वा मन्युस्तन्मन्युमृच्छति १९१

उद्यतासिविषाग्निं च शापोद्यतकरं तथा
आथर्वणेन हन्तारं पिशुनं चैव राजसु १९२

भार्यातिक्रमिणं चैव विद्यात्सप्ताततायिनः
यशोवित्तहरानन्यानाहुर्धर्मार्थहारकान् १९३

उद्देशतस्ते कथितो धरे दराडविधिर्मया
सर्वेषामपराधानां विस्तरादतिविस्तरः १९४

अपराधेषु चान्येसु ज्ञात्वा जातिं धनं वयः
दराडं प्रकल्पयेद्राजा संमन्त्र्य ब्राह्मरौः सह १९५

दराड्यं प्रमोचयन्दराड्याद्द्विगुणं दराडमावहेत्
नियुक्तश्चाप्यदराड्यानां दराडकारी नराधमः १९६

यस्य चौरः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक्
न साहसिकदराडघ्नौ स राजा शक्रलोकभाक् १९७

षष्ठोऽध्यायः

अथोत्तमर्णोऽधमर्णाद्यथादत्तमर्थं गृह्णीयात् १ द्विकं त्रिकं चतुष्कं पञ्चकं च शतं वर्णानुक्रमेण प्रतिमासम् २ सर्वे वर्णा वा स्वप्रतिपन्नां वृद्धिं दद्युः ३ अकृतामपि वत्सरातिक्रमेण यथाविहितम् ४ आध्युपभोगे वृद्ध्यभावः ५ दैवराजोपघातादृते विनष्टमाधिमुत्तमर्णो दद्यात् ६ अन्तवृद्धौ प्रविष्टायामपि ७ न स्थावरमाधिमृते वचनात् ८ गृहीतधनप्रवेशार्थमेव यत्स्थावरं दत्तं तद्गृहीतधनप्रवेशे दद्यात् ९ दीयमानं प्रयुक्तमर्थमुत्तमर्णस्यागृह्णतस्ततः परं न वर्धते १० हिरगयस्य परा वृद्धिर्द्विगुणा ११ धान्यस्य त्रिगुणा १२ वस्त्रस्य चतुर्गुणा १३ रसस्याष्टगुणा १४ संततिः स्त्रीपशूनाम् १५ किराकार्पाससूत्र-चर्मायुधेष्टकाङ्गराणामक्षया १६ अनुक्तानां द्विगुणा १७ प्रयुक्तमर्थं यथा कथंचित्साधयन्न राज्ञो वाच्यः स्यात् १८ साध्यमानश्चेद्राजानमभिगच्छेत्तत्समं दराड्यः १९ उत्तमर्णश्चेद्राजानमियात्तद्विभावितोऽधमर्णो राज्ञे धनदशभाग-संमितं दराडं दद्यात् २० प्राप्तार्थश्चोत्तमर्णो विंशतितममंशम् २१ सर्वापला-प्येकदेशविभाव्रवितोऽपि सर्वं दद्यात् २२ तस्य च भावनास्तिस्त्रो भवन्ति लिखितं साक्षिणः समयक्रिया च २३ ससाक्षिकमाप्तं ससाक्षिकमेव दद्यात् २४ लिख्तार्थे प्रविष्टे लिखितं पाटयेत् २५ असमग्रदाने लेख्यासंनिधाने चोत्तमर्णः स्वलिखितं दद्यात् २६ धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः प्रवसिते वा तत्पुत्रपौत्रैर्धनं देयम् २७ नातः परमनिच्छुभिः २८ सपुत्रस्य

वाप्यपुत्रस्य वा रिक्थग्राही ऋणं दद्यात् २९ निर्धनस्य स्त्रीग्राही ३० न स्त्री पतिपुत्रकृतम् ३१ न स्त्रीकृतं पतिपुत्रौ ३२ न पिता पुत्रकृतम् ३३ अविभक्तैः कृतमृणं यस्तिष्ठेत्स दद्यात् ३४ पैतृकमृणमविभक्तानां भ्रातॄणां च ३५ वि-भक्ताश्च दायानुरूपमंशम् ३६ गोपशौण्डिकशैलूषरजकव्याधस्त्रीणां पति-र्दद्यात् ३७ वाक्प्रतिपन्नं नादेयं कस्यचित् ३८ कुटुम्बार्थे कृतं च ३९

यो गृहीत्वा ऋणं सर्वं श्वो दास्यामीति सामकम्
न दद्याल्लोभतः पश्चात्तथा वृद्धिमवाप्नुयात् ४०

दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते
आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ४१

बहवश्चेत्प्रतिभुवो दद्युस्तेऽर्थं यथाकृतम्
अर्थेऽविशेषिते त्वेषु धनिकच्छन्दतः क्रिया ४२

यमर्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः
ऋणिकस्तं प्रतिभुवे द्विगुणं दातुमर्हति ४३

सप्तमोऽध्यायः

अथ लेख्यं त्रिविधम् १ राजसाक्षिकं ससाक्षिकमसाक्षिकं च २ राजाधि-करणे तन्नियुक्तकायस्थकृतं तदध्यक्षकरचिह्नितं राजसाक्षिकम् ३ यत्र क्वचन येन केनचिल्लिखितं साक्षिभिः स्वहस्तचिह्नितं ससाक्षिकम् ४ स्वहस्त-लिखितमसाक्षिकम् ५ तद्बलात्कारितमप्रमाणम् ६ उपधिकृतानि सर्वाण्येव ७ दूषितकर्मदुष्टसाक्ष्यङ्कितं ससाक्षिकमपि ८ तादृग्विधेन लेखकेन लिखितं च ९ स्त्रीबालास्वतन्त्रमत्तोन्मत्तभीतताडितकृतं च १० देशाचाराविरुद्धं व्यक्ताधिकृतलक्षणमलुप्तप्रक्रमाक्षरं प्रमाणम् ११

वर्णैश्च तत्कृतैश्चिह्नैः पत्रैरेव च युक्तिभिः
संदिग्धं साधयेल्लेख्यं तद्युक्तिप्रतिरूपितैः १२

यत्रर्णी धनिको वापि साक्षी वा लेखकोऽपि वा
म्रियते तत्र तल्लेख्यं तत्स्वहस्तैः प्रसाधयेत् १३

अष्टमोऽध्यायः

अथासाक्षिणः १ न राजश्रोत्रियप्रव्रजितकितवतस्करपराधीनस्त्रीबालसाह-सिकातिवृद्धमत्तोन्मताभिशस्तपतितक्षुत्तृष्णार्तव्यसनिरागान्धाः २ रिपुमित्रा-र्थसंबन्धिविकर्मदृष्टदोषसहायाश्च ३ अनिर्दिष्टस्तु साक्षित्वे यश्चोपेत्य ब्रूयात् ४ एकश्चासाक्षी ५ स्तेयसाहसवाग्दण्डपारुष्यसंग्रहणेषु साक्षिणो न परीक्ष्याः ६ अथ साक्षिणः ७ कुलजा वृत्तवित्तसंपन्ना यज्वानस्तपस्विनः पुत्रिणो धर्मज्ञा अधीयानाः सत्यवन्तस्त्रैविद्यवृद्धाश्च ८ अभिहितगुणसंपन्न उभयानुमत एकोऽपि ९ द्वयोर्विवदमानयोर्यस्य पूर्ववादस्तस्य साक्षिणः प्रष्टव्याः १० आधर्यं कार्यवशाद्यत्र पूर्वपक्षस्य भवेत्तत्र प्रतिवादिनोऽपि ११ उद्दिष्टसाक्षिणि मृते देशान्तरगते च तदभिहितश्रोतारः प्रमाणम् १२ समक्षदर्शनात्साक्षी श्रवणाद्वा १३ साक्षिणश्च सत्येन पूयन्ते १४ वर्णिनां यत्र वधस्तत्रानृतेन १५ तत्पावनाय कूश्माण्डीभिर्द्विजोऽग्निं घृतेन जुहुयात् १६ शूद्र एकाहिकं गोद-शकस्य ग्रासं दद्यात् १७ स्वभावविकृतौ मुखवर्णविनाशेऽसंबद्धप्रलापे च कूटसाक्षिणं विद्यात् १८ साक्षिणश्चाहूय आदित्योदये कृतशपथान्पृच्छेत् १९ ब्रूहीति ब्राह्मणं पृच्छेत् २० सत्यं ब्रूहीति राजन्यम् २१ गोबीजकाञ्चनैर्वैश्यम् २२ सर्वमहापातकैस्तु शूद्रम् २३ साक्षिणश्च श्रावयेत् २४ ये महापातकिनां लोका ये चोपपातकिनां ते कूटसाक्षिणामपि २५ जननमरणान्तरे कृतसुकृत-हानिश्च २६ सत्येनादित्यस्तपति २७ सत्येन भाति चन्द्रमाः २८ सत्येन वाति पवनः २९ सत्येन भूर्धारयति ३० सत्येनापस्तिष्ठन्ति ३१ सत्येनाग्निः ३२ खं च सत्येन ३३ सत्येन देवाः ३४ सत्येन यज्ञाः ३५

अश्वमेधसहस्त्रं च सत्यं च तुलया धृतम्
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ३६

जानन्तोऽपि हि ये साक्ष्ये तूष्णींभूता उदासते
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन चाप्यथ ३७

एवं हि साक्षिणः पृच्छेद्वर्णानुक्रमतो नृपः ३८

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्
अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः ३९

बहुत्वं प्रतिगृह्णीयात्साक्षिद्वैधे नराधिपः
समेषु च गुणोत्कृष्टान्गुणिद्वैधे द्विजोत्तमान् ४०

यस्मिन्यस्मिन्विवादे तु कूटसाक्ष्यनृतं वदेत्
तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ४१

नवमोऽध्यायः

अथ समयक्रिया १ राजद्रोहसाहसेषु यथाकामम् २ निक्षेपस्तेयेष्वर्थप्रमाणं ३ सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत् ४ तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत् ५ द्विकृष्णलोने तिलकरम् ६ त्रिकृष्णलोने रजतकरम् ७ चतुः-कृष्णलोने सुवर्णकरम् ८ पञ्चकृष्णलोने सीरोद्धृतमहीकरम् ९ सुवर्णार्धोने कोशो देयः शूद्रस्य १० ततः परं यथार्हं धटाग्न्युदकविषाणामन्यतमम् ११ द्विगुणेऽर्थे यथाभिहिताः समयक्रिया वैश्यस्य १२ त्रिगुणे राजन्यस्य १३ कोशवर्जं चतुर्गुणे ब्राह्मणस्य १४ न ब्राह्मणस्य कोशं दद्यात् १५ अन्यत्रा-गामिकालसमयनिबन्धनक्रियातः १६ कोशस्थाने ब्राह्मणं सीतोद्धृतमही-करमेव शापयेत् १७ प्राग्दृष्टदोषे स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत् १८ सत्सु विदितं सच्चरितं न महत्यर्थेऽपि १९ अभियोक्ता वर्तयेच्छीर्षम् २० अभियुक्तश्च दिव्यं कुर्यात् २१ राजद्रोहसाहसेषु विनापि शीर्षवर्तनात् २२ स्त्रीब्राह्मणविकलासमर्थरोगिणां तुला देया २३ सा च न वाति वायौ २४ न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः २५ शरद्ग्रीष्मयोश्च २६ न कुष्ठिपै-त्तिकब्राह्मणानां विषं देयम् २७ प्रावृषि च २८ न श्लेष्मव्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनां चोदकम् २९ हेमन्तशिशिरयोश्च ३० न नास्तिकेभ्यः कोशो देयः ३१ न देशे व्याधिमरकोपसृष्टे चे ३२

सचैलस्नातमाहूय सूर्योदय उपोषितम्

कारयेत्सर्वदिव्यानि देवब्राह्मणसंनिधौ ३३

## दशमोऽध्यायः

अथ धटः १ चतुर्हस्तोच्छ्रितो द्विहस्तायतः २ तत्र सारवृक्षोद्भवा पञ्चहस्तायतोभयतःशिक्या तुला ३ तां च सुवर्णकारकांस्यकाम्राणामन्यतमो बिभृयात् ४ तत्र चैकस्मिञ्शिक्ये पुरुषं दिव्यकारिणमारोपयेद्द्वितीये प्रतिमानं शिलादि ५ प्रतिमानपुरुषौ समधृतौ सुचिह्नितौ कृत्वा पुरुषमवतारयेत् ६ धटं च समयेन गृह्णीयात् ७ तुलाधारं च ८

ब्रह्मघ्नां ये स्मृता लोका ये लोकाः कूटसाक्षिणाम्
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ९

धर्मपर्यायवचनैर्धट इत्यभिधीयसे
त्वमेव धट जानीषे न विदुर्यानि मानुषाः १०

व्यवहाराभिशस्तोऽयं मानुषस्तोल्यते त्वयि
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ११

ततस्त्वारोपयेच्छिक्ये भूय एवाथ तं नरम्
तुलितो यदि वर्धेत ततः शुद्धः स धर्मतः १२

शिक्यच्छेदाक्षभङ्गेषु भूयस्त्वारोपयेन्नरम्
एवं निःसंशयं ज्ञानं यतो भवति निर्णयः १३

## एकादशोऽध्यायः

अथाग्निः १ षोडशाङ्गुलं तावदन्तरं मण्डलसप्तकं कुर्यात् २ ततः प्राङ्मुखस्य प्रसारितभुजद्वयस्य सप्ताश्वत्थपत्राणि करयोर्दद्यात् ३ तानि च करद्वयसहितानि सूत्रेण वेष्टयेत् ४ ततस्तत्राग्निवर्णं लोहपिण्डं पञ्चाशत्पलिकं समं न्यसेत् ५ तमादाय नातिद्रुतं नातिविलम्बितं मण्डलेषु पादन्यासं कुर्वन्व्रजेत् ६ ततः सप्तमं मण्डलमतीत्य भूमौ लोहपिण्डं जह्यात् ७

यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिषेत्
न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नरः ८

भयाद्वा पातयेद्यस्तु दग्धो वा न विभाव्यते
पुनस्तं हारयेल्लोहं समयस्याविशोधनात् ९

करौ विमृदितव्रीहेस्तस्यादावेव लक्षयेत्
अभिमन्त्र्यास्य करयोर्लोहपिण्डं ततो न्यसेत् १०

त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत्
त्वमेवाग्ने विजानीषे न विदुर्यानि मानवाः ११

व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि १२

द्वादशोऽध्यायः

अथोदकम् १ पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिवर्जितेऽम्भसि २ तत्र नाभिमग्नस्यारोगद्वेषिणः पुरुषस्यान्यस्य जानुनी गृहीत्वाभिमन्त्रितमम्भः प्रविशेत् ३ तत्समकालं च नातिक्रूरमृदुना धनुषा पुरुषोऽपरः शरक्षेपं कुर्यात् ४ तं चापरः पुरुषो जवेन शरमानयेत् ५

तन्मध्ये यो न दृश्येत स शुद्धः परिकीर्तितः
अन्यथा ह्यविशुद्धः स्यादेकाङ्गस्यापि दर्शने ६

त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत्
त्वमेवाम्भो विजानीषे न विदुर्यानि मानुषाः ७

व्यवहाराभिशतोऽयं मानुषस्त्वयि मज्जति
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ८

## त्रयोदशोऽध्यायः

अथ विषम् १ विषान्यदेयानि सार्वाणि २ ऋते हिमाचलोद्भवात्शार्ङ्गात् ३ तस्य च यवसप्तकं घृतप्लुतमभिशस्ताय दद्यात् ४

विषं वेगक्लमापेतं सुखेन यदि जीर्यते
विशुद्धं तमिति ज्ञात्वा दिवसान्ते विसर्जयेत् ५

विषत्वाद्विषमत्वाच्च क्रूरं त्वं सर्वदेहिनाम्
त्वमेव विष जानीषे न विदुर्यानि मानुषाः ६

व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ७

## चतुर्दशोऽध्यायः

अथ कोशः १ उग्रान्देवान्समभ्यर्च्य तत्स्नानोदकात्प्रसृतित्रयं पिबेत् २ इदं मया न कृतमिति वदन्स्थापितदेवताभिमुखः ३

यस्य पश्येद्द्विसप्ताहात्त्रिसप्ताहादथापि वा
रोगोऽग्निर्ज्ञातिमरणं राजातङ्कं अथापि वा ४

तमशुद्धं विजानीयात्तथा शुद्धं विपर्यये
दिव्ये च शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः ५

## पञ्चदशोऽध्यायः

अथ द्वादश पुत्रा भवन्ति १ स्वक्षेत्रे संस्कृतायामुत्पादितः स्वयमौरसः प्रथमः २ नियुक्तायां सपिण्डेनोत्तमवर्णेन वोत्पादितः क्षेत्रजो द्वितीयः ३ पुत्रीकापुत्रस्तृतीयः ४ यस्त्वस्याः पुत्रः स मे पुत्रो भवेदिति या पित्रा दत्ता सा पुत्रिका ५ पुत्रिकाविधिं विनापि प्रतिपादिता भ्रातृविहीना पुत्रिकैव ६ पौनर्भवश्चतुर्थः ७ अक्षता भूयः संस्कृता पुनर्भूः ८ भूयस्त्वसंस्कृतापि परपूर्वा ९ कानीनः पञ्चमः १० पितृगृहे असंस्कृतयैवोत्पादितः ११ स च पाणिग्राहस्य

१२ गृहे च गूढोत्पन्नः षष्ठः १३ यस्य तल्पजस्तस्यासौ १४ सहोढः सप्तमः १५ या गर्भिणी संस्क्रियते तस्याः पुत्रः १६ स च पाणिग्राहस्य १७ दत्त-कश्चाष्टमः १८ स च मातापितृभ्यां यस्य दत्तः १९ क्रीतश्च नवमः २० स च येन क्रीतः २१ स्वयमुपगतो दशमः २२ स च यस्योपगतः २३ अपवि-द्धस्त्वेकादशः २४ पित्रा मात्रा च परित्यक्तः २५ स च येन गृहीतः २६ यत्र क्वचनोत्पादितश्च द्वादशः २७ एतेषां पूर्वः पूर्वः श्रेयान् २८ स एव दायहरः २९ स चान्यान्बिभृयात् ३० अनूढानां स्ववित्तानुरूपेण संस्कारं कुर्यात् ३१ पतितक्लीबाचिकित्स्यरोगविकलास्त्वभागहारिणः ३२ रिक्थ-ग्राहिभिस्ते भर्तव्याः ३३ तेषां चाउरसाः पुत्रा भागहारिणः ३४ न तु पतितस्य ३५ पतनीये कर्मणि कृते त्वनन्तरोत्पन्नाः ३६ प्रतिलोमासु स्त्रीषु चोत्प-न्नाश्चाभागिनः ३७ तत्पुत्राः पैतामहेऽप्यर्थे ३८ अंशग्राहिभिस्ते भरणीयाः ३९ यश्चार्थहरः स पिण्डदायी ४० एकोढानामप्येकस्याः पुत्रः सर्वासां पुत्र एव ४१ भ्रातृणामेकजातानां च ४२ पुत्रः पितृवित्तालाभेऽपि पिण्डं दद्यात् ४३

पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ४४

ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ४५

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ४६

पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते
दौहित्रोऽपि ह्यपुत्रं तं संतारयति पौत्रवत् ४७

षोडशोऽध्यायः

समानवर्णासु पुत्राः सवर्णा भवन्ति १ अनुलोमासु मातृसवर्णाः २ प्रति-लोमास्वार्यविगर्हिताः ३ तत्र वैश्यापुत्रः शूद्रेणायोगवः ४ पुल्कसमागधौ क्षत्रियापुत्रौ वैश्यशूद्राभ्याम् ५ चण्डालवैदेहकसूताश्च ब्राह्मणीपुत्राः शूद्र-

विट्क्षत्रियैः ६ संकरसंकराशासंख्येयाः ७ रङ्गावतरणमायोगवानाम् ८ व्याधता पुल्कसानाम् ९ स्तुतिक्रिया मागधानाम् १० वध्यघातित्वं चण्डालानाम् ११ स्त्रीरक्षा तज्जीवनं च वैदेहकानाम् १२ अश्वसारथ्यं सूतानाम् १३ चण्डालानां बहिर्ग्रामनिवसनं मृतचैलधारणमिति विशेषः १४ सर्वेषां च समानजातिभिर्विवाहः १५ स्वपितृवित्तानुहरणं च १६

संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः १७

ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः
स्त्रीबालाद्यवपत्तौ च बाह्यानां सिद्धिकारणम् १८

सप्तदशोऽध्यायः

पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपार्जितेऽर्थे १ पैतामहे त्वर्थे पितृपुत्रयोस्तुल्यं स्वामित्वम् २ पितृविभक्ता विभागानन्तरोत्पन्नस्य भागं दद्युः ३ अपुत्रधनं पत्न्यभिगामि ४ तदभावे दुहितृगामि ५ तदभावे पितृगामि ६ तदभावे मातृगामि ७ तदभावे भ्रातृगामि ८ तदभावे भ्रातृपुत्रगामि ९ तदभावे बन्धुगामि १० तदभावे सकुल्यगामि ११ तदभावे सहाध्यायिगामि १२ तदभावे ब्राह्मणधनवर्जं राजगामि १३ ब्राह्मणार्थो ब्राह्मणानाम् १४ वानप्रस्थधनमाचार्यो गृह्णीयात् १५ शिष्यो वा १६

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः
दद्यादपहरेच्चांशं जातस्य च मृतस्य च १७

पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतमाधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयकमिति स्त्रीधनम् १८ ब्राह्मादिषु चतुर्षु विवाहेष्वप्रजायामतीतायां तद्भर्तुः १९ शेषेषु च पिता हरेत् २० सर्वेष्वेव प्रसूतायां यद्धनं तद्दुहितृगामि २१

पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत्
न तं भजेरन्दायादा भजमानाः पतन्ति ते २२

अनेकपितृकाणां तु पितृतोंऽशप्रकल्पना
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः २३

## अष्टादशोऽध्यायः

ब्राह्मणस्य चतुर्षु वर्णेषु चेत्पुत्रा भवेयुस्ते पैतृकं रिक्थं दशधा विभजेयुः १ तत्र ब्राह्मणीपुत्रश्चतुरोंऽशानादद्यात् २ क्षत्रियापुत्रस्त्रीन् ३ द्वावंशौ वैश्यापुत्रः ४ शूद्रापुत्रस्त्वेकम् ५ अथ चेच्छूद्रवर्जं ब्राह्मणस्य पुत्रत्रयं भवेत्तदा तद्धनं नवधा विभजेयुः ६ वर्नानुक्रमेण चतुस्त्रिद्विभागीकृतानंशानादद्युः ७ वैश्यवर्जमष्टधा कृतं चतुरस्त्रीनेकं चादद्युः ८ क्षत्रियवर्जं सप्तधा कृतं चतुरो द्वावेकं च ९ ब्राह्मणवर्जं षड्धा कृतं त्रीन्द्वावेकं च १० क्षत्रियस्य क्षत्रियावैश्याशूद्रापुत्रेष्वयमेव विभागः ११ अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्यातां तदा सप्तधा कृताद्धनाद्ब्राह्मणश्चतुरोंऽशानादद्यात् १२ त्रीन्राजन्यः १३ अथ ब्राह्मणस्य ब्राह्मणवैश्यौ तदा षड्धा विभक्तस्य चतुरोंऽशान्ब्राह्मणस्त्वादद्यात् १४ द्वावंशौ वैश्यः १५ अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां तदा तद्धनम्पञ्चधा विभजेयाताम् १६ चतुरोंऽशान्ब्राह्मणस्त्वादद्यात् १७ एकं शूद्रः १८ अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियवैश्यौ पुत्रौ स्यातां तदा तद्धनं पञ्चधा विभजेयाताम् १९ त्रीनंशान्क्षत्रियस्त्वादद्यात् २० द्वावंशौ वैश्यः २१ अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियशूद्रौ पुत्रौ स्यातां तदा तद्धनं चतुर्धा विभजेयाताम् २२ त्रीनंशान्क्षत्रियस्त्वादद्यात् २३ एकं शूद्रः २४ अथ ब्राह्मणस्य क्षत्रियस्य वैश्यस्य वा वैश्यशूद्रौ पुत्रौ स्यातां तदा तद्धनं त्रिधा विभजेयाताम् २५ द्वावंशौ वैश्यस्त्वादद्यात् २६ एकं शूद्रः २७ अथैकपुत्रा ब्राह्मणस्य ब्राह्मणक्षत्रियवैश्याः सर्वहराः २८ क्षत्रियस्य राजन्यवैश्यौ २९ वैश्यस्य वैश्यः ३० शूद्रः शूद्रस्य ३१ द्विजातीनां शूद्रस्त्वेकः पुत्रोऽर्धहरः ३२ अपुत्ररिक्थस्य या गतिः सात्रार्धस्य द्वितीयस्य ३३ मातरः पुत्रभागानुसारेण भागापहारिण्यः ३४ अनूढाश्च दुहितरः ३५ समानवर्णाः पुत्राः समानंशानादद्युः ३६ ज्येष्ठाय श्रेष्ठमुद्धारं दद्युः ३७ यदि द्वौ ब्राह्मणीपुत्रौ स्यातामेकः शूद्रापुत्रः तदा नवधा विभक्तस्यार्थस्य ब्राह्मणीपुत्रावष्टौ भागानादद्यातामेकं शूद्रापुत्रः ३८ अथ शूद्रापुत्रावुभौ स्यातामेको ब्राह्मणीपुत्रः तदा षड्धा विभक्तस्यार्थस्य चतुरोंऽशान्ब्राह्मणस्त्वादद्याद्द्वावंशौ शूद्रापुत्रौ ३९ अनेन क्रमेणान्यत्राप्यंशकल्पना भवति ४०

विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि
समस्तत्र विभागः स्याज्ज्येष्ठ्यं तत्र न विद्यते ४१

अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जयेत्
स्वयमीहितलब्धं तन्नाकामो दातुमर्हति ४२

पैतृकं तु यदा द्रव्यमनवाप्तं यदाप्नुयात्
न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ४३

वस्त्रं पत्रमलंकारः कृतान्नमुदकं स्त्रियः
योगक्षेमं प्रचारश्च न विभाज्यं च पुस्तकम् ४४

एकोनविंशोऽध्यायः

मृतं द्विजं न शूद्रेण निर्हारयेत् १ न शूद्रं द्विजेन २ पितरं मातरं च पुत्रा निर्हरेयुः ३ न द्विजं पितरमपि शूद्राः ४ ब्राह्मणमनाथं ये ब्राह्मणा निर्हरन्ति ते स्वर्गलोकभाजः ५ निर्हृत्य च बान्धवं प्रेतं संष्कृत्याप्रदक्षिणेन चितामभि-गम्याप्सु सवाससो निमज्जनं कुर्युः ६ प्रेतस्योदकनिर्वपणं कृत्वैकं पिण्डं कुशेषु दद्युः ७ प्रिवर्तितवाससश्च निम्बपत्राणि विदश्य द्वार्यश्मनि पदन्यासं कृत्वा गृहं प्रविशेयुः ८ अक्षतांश्चाग्नौ क्षिपेयुः ९ चतुर्थे दिवसेऽस्थिसंचयनं कुर्युः १० तेषां गङ्गाम्भसि प्रक्षेपः ११ यावत् संख्यमस्थि पुरुषस्य गङ्गाम्भसि तिष्ठति तावद्वर्षसहस्राणि स्वर्गलोकमधितिष्ठति १२ यावदाशौचं तावत् प्रेतस्योदकं पिण्डमेकं च दद्युः १३ क्रीतलब्धाशनाश्च भवेयुः १४ अमांसाश-नाश्च १५ स्थण्डिलशायिनः १६ पृथक्शायिनश्च १७ ग्रामान्निष्क्रम्याशौचान्ते कृतश्मश्रुकर्माणस्तिलकल्कैः सर्षपकल्कैर्वा स्नाताः परिवर्तितवाससो गृहं प्रविशेयुः १८ तत्र शान्तिं कृत्वा ब्राह्मणानां च पूजनं कुर्युः १९ देवाः परोक्ष-देवाः प्रत्यक्षदेवा ब्राह्मणाः २० ब्राह्मणैर्लोका धार्यन्ते २१

ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः
ब्राह्मणाभिहितं वाक्यं न मिथ्या जायते क्वचित् २२

यद्ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः प्रत्यभिनन्दयन्ति
तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः २३

दुःखान्वितानां मृतबान्धवानामाश्वासनं कुर्युरदीनसत्त्वाः
वाक्यैस्तु यैर्भूमि तवाभिधास्ये वाक्यान्यहं तानि मनोऽभिरामे २४

विंशोऽध्यायः

यदुत्तरायणं तदहर्देवानाम् १ दक्षिणायनं रात्रिः २ संवत्सरोऽहोरात्रः ३ तत्रिंशता मासाः ४ मासा द्वादश वर्षम् ५ द्वादश वर्षशतानि दिव्यानि कलियुगम् ६ द्विगुणानि द्वापरम् ७ त्रिगुणानि त्रेता ८ चतुर्गुणानि कृतयुगम् ९ द्वादशवर्षसहस्राणि दिव्यानि चतुर्युगम् १० चतुर्युगाणामेकसप्ततिर्मन्वन्तरम् ११ चतुर्युगसहस्रं च कल्पः १२ स च पितामहस्याहः १३ तावती चास्य रात्रिः १४ एवंविधेनाहोरात्रेण मासवर्षगणनया सर्वस्यैव ब्रह्मणो वर्षशतमायुः १५ ब्रह्मायुषा च परिच्छिन्नः पौरुषो दिवसः १६ तस्यान्ते महाकल्पः १७ तावत्येवास्य निशा १८ पौरूषेयाणामहोरात्राणामतीतानां संख्यैव नास्ति १९ न च भविष्याणाम् २० अनाद्यन्तत्वात्कालस्य २१

एवमस्मिन्निरालम्बे काले सततयायिनि
न तद्भूतं प्रपश्यामि स्थितिर्यस्य भवेद्ध्रुवा २२

गङ्गायाः सिकता धारास्तथा वर्षति वासवे
शक्या गणयितुं लोके न व्यतीताः पितामहाः २३

चतुर्दश विनश्यन्ति कल्पे कल्पे सुरेश्वराः
सर्वलोकप्रधानाश्च मनवश्च चतुर्दश २४

बहूनीन्द्रसहस्राणि दैत्येन्द्रनियुतानि च
विनष्तानीह कालेन मनुजेष्वथ का कथा २५

राजर्षयश्च बहवः सर्वैः समुदिता गुणैः

देवा ब्रह्मर्षयश्चैव कालेन निधनं गताः २६

ये समर्था जगत्यस्मिन्सृष्टिसंहारकारणे
तेऽपि कालेन नीयन्ते कालो हि दुरतिक्रमः २७

आक्रम्य सर्वः कालेन परलोकं च नीयते
कर्मपाशवशो जन्तुस्तत्र का परिदेवना २८

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च
अर्थे दुष्परिहार्येऽस्मिन्नास्ति लोके सहायता २९

शोचन्तो नोपकुर्वन्ति मृतस्येह जना यतः
अतो न रोदितव्यं हि क्रिया कार्या स्वशक्तितः ३०

सुकृतं दुष्कृतं चोभौ सहायौ यस्य गच्छतः
बान्धवैस्तस्य किं कार्यं शोचद्भिरथ वा न वा ३१

बान्धवानामशौचे तु स्थितिं प्रेतो न विन्दति
अतस्त्वभ्येति तानेव पिण्डतोयप्रदायिनः ३२

अर्वाक्सपिण्दीकरणात्प्रेतो भवति यो मृतः
प्रेतलोकगतस्यान्नं सोदकुम्भं प्रयच्छत ३३

पितृलोकगतश्चान्नं श्राद्धे भुङ्क्ते स्वधासमम्
पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छत ३४

देवत्वे यातनास्थाने तिर्यग्योनौ तथैव च
मानुष्ये च तथाप्नोति श्राधं दत्तं स्वबान्धवैः ३५

प्रेतस्य श्राद्धकर्तुश्च पुष्टिः श्राद्धे कृते ध्रुवम्

तस्माच्छ्राद्धं सदा कार्यं शोकं त्यक्त्वा निरर्थकम्  ३६

एतावदेव कर्तव्यं सदा प्रेतस्य बन्धुभिः
नोपकुर्यान्नरः शोचन्प्रेतस्यात्मन एव च  ३७

दृष्ट्वा लोकमनाक्रन्दं म्रियमाणांश्च बान्धवान्
धर्ममेकं सहायार्थं वरयध्वं सदा नराः  ३८

मृतोऽपि बान्धवः शक्तो नानुगन्तुं नरं मृतम्
जायावर्जं हि सर्वस्य याम्यः पन्था विरुध्यते  ३९

धर्म एकोऽनुयात्येनं यत्र क्वचन गामिनम्
नन्वसारे नृलोकेऽस्मिन्धर्मं कुरुत मा चिरम्  ४०

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्
न हि प्रतीक्षते मृत्युः कृतं वास्य न वाकृतम्  ४१

क्षेत्रापणगृहासक्तमन्यत्र गतमानसम्
वृकीवोरणमासाद्य मृत्युरादाय गच्छति  ४२

न कालस्य प्रियः कश्चिद्द्वेष्यश्चास्य न विद्यते
आयुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम्  ४३

नाप्राप्तकालो म्रियते विद्धः शरशतैरपि
कुशाग्रेणापि संष्पृष्टः प्राप्तकालो न जीवति  ४४

नाउशधानि न मन्त्राश्च न होमा न पुनर्जपाः
त्रायन्ते मृत्युनोपेतं जरया वापि मानवम्  ४५

आगामिनमनर्थं हि प्रविधानशतैरपि

न निवारयितुं शक्तस्तत्र का परिदेवना ४६

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्
तथा पूर्वकृतं कर्म कर्तारं विन्दते ध्रुवम् ४७

अव्यक्तादीनि भूतानि व्यक्तमध्यानि चाप्यथ
अव्यक्तनिधनान्येव तत्र का परिदेवना ४८

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा
तहता देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ४९

गृह्णातीह यथा वस्त्रं त्यक्त्वा पूर्वधृतं नरः
गृह्णात्येवं नवं देही देहं कर्मनिबन्धनम् ५०

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ५१

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च
नित्यः सततगः स्थाणुरचलोऽयं सनातनः ५२

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते
तस्मादेवं विदित्वैनं नानुशोचितुमर्हथ ५३

## एकविंशोऽध्यायः

अथाशौचव्यपगमे सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तस्त्वेवंविधानेव ब्राह्मणान्यथाशक्ति उदङ्मुखान्गन्धमाल्यवस्त्रालंकारादिभिः पूजितान्भोजयेत् १ एकवन्मन्त्रानूहेदेकोद्दिष्टे २ उच्छिष्टसंनिधावेकमेव तन्नामगोत्राभ्यां पिण्डं निर्वपेत् ३ भुक्तवत्सु ब्राह्मणेषु दक्षिणयाभिपूजितेषु प्रेतनामगोत्राभ्यां दत्ताक्ष-य्योदकः चतुरङ्गुलपृथ्वीः तावदन्तराः तावदधःखाताः वितस्त्यायताः तिस्रः कर्षूः कुर्यात् ४ कर्षूसमीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य तत्रैकैकस्मि-

नाहुतित्रयं जुहुयात् ५ सोमाय पितृमते स्वधा नमः ६ अग्नये कव्यवाहनाय स्वथा नमः ७ यमायाङ्गिरसे स्वधा नमः ८ स्थानत्रये च प्राग्वत्पिण्डनिर्वपणं कुर्यात् ९ अन्नदधिघृतमधुमांसैः कर्षूत्रयं पूरयित्वा एतत्त इति जपेत् १० एवं मृताहे प्रतिमासं कुर्यात् ११ संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान्देवपूर्वान्भोजयेत् १२ अत्राग्नौकरणमावाहनं पाद्यं च कुर्यात् १३ संसृजतु त्वा पृथिवी समानी च इति च प्रेतपाद्यपात्रे पितृपाद्यपात्रत्रये योजयेत् १४ उच्छिष्टसंनिधौ पिण्डचतुष्टयं कुर्यात् १५ ब्राह्मणांश्च स्वाचान्तान्दत्तदक्षिणांश्चानुव्रज्य विसर्जयेत् १६ ततः प्रेतपिण्डं पाद्यपात्रोदकवत्पिण्डत्रये निदध्यात् १७ कर्षूत्रयसंनिकर्षेऽप्येवमेव १८ सपिण्डीकरणं मासिकार्थवद्द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात् १९ मन्त्रवर्जं हि शूद्राणां द्वादशेऽह्नि २० संवत्सराभ्यन्तरे यद्यधिमासो भवेत्तदा मासिकार्थे दिनमेकं वर्धयेत् २१

सपिण्डीकरणं स्त्रीणां कार्यमेवं तथा भवेत्
यावज्जीवं तथा कुर्याच्छ्राद्धं तु प्रतिवत्सरम् २२

अर्वाक्सपिण्डीकरणं यस्य संवत्सरात्कृतं
तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मने २३

## द्वाविंशोऽध्यायः

ब्राह्मणस्य सपिण्डानां जननमरणयोर्दशाहमाशौचम् १ द्वादशाहं राजन्यस्य २ पञ्चदशाहं वैश्यस्य ३ मासं शूद्रस्य ४ सपिण्डता च पुरुषे सप्तमे विनिवर्तते ५ आशौचे होमदानप्रतिग्रहस्वाध्याया निवर्तन्ते ६ नाशौचे कस्यचिदन्नमश्नीयात् ७ ब्राह्मणादीनामशौचे यः सकृदेवान्नमत्ति तस्य तावदाशौचं यावत्तेषाम् ८ आशौशापगमे प्रायश्चित्तं कुर्यात् ९ सवर्णस्याशौचे द्विजो भुक्त्वा स्त्रवन्तीमासाद्य तन्निमग्नस्त्रिरघमर्षणं जप्त्वोत्तीर्य गायत्र्यष्टसहस्त्रं जपेत् १० क्षत्रियाशौचे ब्राह्मणस्त्वेतदेवोपोषितः कृत्वा शुध्यति ११ वैश्याशौचे राजन्यश्च १२ वैश्याशौचे ब्राह्मणस्त्रिरात्रोपोषितश्च १३ ब्राह्मणाशौचे राजन्यः क्षत्रियाशौचे वैश्यश्च स्त्रवन्तीमासाद्य गायत्रीशतपञ्चकं जपेत् १४ वैश्यश्च ब्राह्मणाशौचे गायत्र्यष्टशतं जपेत् १५ शूद्राशौचे द्विजो भुक्त्वा प्राजापत्यं

चरेत् १६ शूद्रश्च द्विजाशौचे स्नानमाचरेत् १७ शूद्रः शूद्राशौचे स्नातः पञ्चगव्यं पिबेत् १८ पत्नीनां दासानामानुलोम्येन स्वामिनस्तुल्यमाशौचम् १९ मृते स्वामिन्यात्मीयम् २० हीनवर्णानामधिकवर्णेषु सपिण्डेषु तदशौचव्यपगमे शुद्धिः २१ ब्राह्मणस्य क्षत्रिविट्शूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः २२ क्षत्रियस्य विट्शूद्रयोः षड्रात्रत्रिरात्राभ्याम् २३ वैश्यस्य शूद्रेषु षड्रात्रेण २४ मासतुल्यैरहोरात्रैर्गर्भस्रावे २५ जातमृते मृतजाते वा कुलस्य सद्यः शौचम् २६ अदन्तजाते बाले प्रेते सद्य एव २७ नास्याग्निसंस्कारो नोदकक्रिया २८ दन्तजाते त्वकृतचूडे त्वहोरात्रेण २९ कृतचूडे त्वसंस्कृते त्रिरात्रेण ३० ततः परं यथोक्तकालेन ३१ स्त्रीणां विवाहः संस्कारः ३२ संस्कृतासु स्त्रीषु नाशुचं पितृपक्षे ३३ तत्प्रसवमरणे चेत्पितृगृहे स्यातां तदा एकरात्रं त्रिरात्रं च ३४ जननाशौचमध्ये यद्यपरं जननाशौचं स्यात्तदा पूर्वाशौचव्यपगमे शुद्धिः ३५ रात्रिशेषे दिनद्वयेन ३६ प्रभाते दिनत्रयेण ३७ मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम् ३८ श्रुत्वा देशान्तरस्थो जननमरणे आशौचशेषेण शुध्येत् ३९ व्यतीतेऽशौचे संवत्सरान्तस्त्वेकरात्रेण ४० ततः परं स्नानेन ४१ आचार्ये मातामहे च व्यतीते त्रिरात्रेण ४२

अनौरसेषु पुत्रेषु जातेषु च मृतेषु च
परपूर्वासु भार्यासु प्रसूतासु मृतासु च ४३

आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वशुर्यसहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण ४४ स्वदेशराजनि च ४५ असपिण्डे स्ववेश्मनि मृते च ४६ भृग्वग्न्यनाशकाम्बुसंग्रामविद्युन्नृपहतानां नाशौचम् ४७ न राज्ञां रजकर्मणि ४८ न व्रतिनां व्रते ४९ न सत्रिणां सत्रे ५० न कारूणां कारुकर्मणि ५१ न राजाज्ञाकारिणां तदिच्छया ५२ न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयोः ५३ न देशविभ्रमे ५४ आपद्यपि च कष्टायाम् ५५ आत्मत्यागिनः पतिताश्च नाशौचोदकभाजः ५६ पतितस्य दासी मृतेऽह्नि पदा अपां घटमपवर्जयेत् ५७ उद्बन्धनमृतस्य यः पाशं छिन्द्यात्स तप्तकृच्छ्रेण शुध्यति ५८ आत्मत्यागिनां संस्कर्ता च ५९ तदश्रुपातकारी च ६० सर्वस्यैव प्रेतस्य बान्धवैः सहाश्रुपातं कृत्वा स्नानेन ६१ अकृतेऽस्थिसंचये सचैलस्नानेन ६२ द्विजः शूद्रप्रेतानुगमनं कृत्वा स्रवन्तीमासाद्य तन्निमग्नः त्रिरघमर्षणं जप्त्वोत्तीर्य गायत्र्यष्टसहस्रं जपेत् ६३

द्विजप्रेतस्याष्टशतम् ६४ शूद्रः प्रेतानुगमनं कृत्वा स्नानमाचरेत् ६५ चिता-धूमसेवने सर्वे वर्णाः स्नानमाचरेयुः ६६ मैथुने दुःस्वप्ने रुधिरोपगतकण्ठे वमनविरेकयोश्च ६७ श्मश्रुकर्मणि कृते च ६८ शवस्पृशं च स्पृष्ट्वा रजस्वलाचण्डालयूपांश्च ६९ भक्ष्यवर्जं पञ्चनखशवं तदस्थिस्नेहं च ७० सर्वेष्वेतेषु स्नानेषु वस्त्रं नाप्रक्षालितं बिभृयात् ७१ रजस्वला चतुर्थेऽह्नि स्नानाच्छुध्यति ७२ रजस्वला हीनवर्णां रजस्वलां स्पृष्ट्वा न तावदश्नीयाद्यावन्न शुद्धा ७३ सवर्णामधिकवर्णां वा स्पृष्ट्वा सद्यः स्नात्वा शुध्यति ७४ क्षुत्वा सुप्त्वा भुक्त्वा भोजनाध्ययनेप्सुः पीत्वा स्नात्वा निष्ठीव्य वासः परिधाय रथ्यामाक्रम्य मूत्रपुरीषं कृत्वा पञ्चनखास्थि अस्नेहं स्पृष्ट्वा चाचमेत् ७५ चण्डालम्लेच्छसंभाषणे च ७६ नाभेरधस्तात्प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैश्चोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य शुध्येत् ७७ अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन ७८ वक्त्रोपहतस्त्वुपोष्य स्नात्वा पञ्चगव्येन ७९ दशनच्छदोपहतश्च ८०

वसा शुक्रमसृङ्मज्ज्ञा मूत्रं विट्कर्णविण्नखाः
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ८१

गौडी माध्वी च पैष्टी च ज्ञेया त्रिविधा सुरा
यथैवैका तथा सर्वा न पातव्या द्विजातिभिः ८२

माधूकमैक्षवं टाङ्कं कौलं खार्जूरपानसे
मृद्वीकारसमाध्वीके मैरेयं नारिकेलजम् ८३

अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य च
राजन्यश्चैव वैश्यश्च स्पृष्ट्वैतानि न दुष्यतः ८४

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्
प्रेताहारैः समं तत्र दशरात्रेण शुध्यति ८५

आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम्

